# वेदान्तस्यमन्तकः ।

श्रीश्रीश्यामसुन्दर सेवाधिकारिणा

श्रीमद् बलदेव बिद्याभूषणेन

बिरचितः ।

शान्तिपुर निवासिना

श्रीकालिदास नाथेन संस्कृतः

प्रकाशितश्च ।

श्रीश्रीचैतन्याब्दः ४०० ।



CALCUTTA

PRINTED BY D. P. MISRA, AT THE

'UCHITA-VAKTA' PRESS.

65. CROSS STREET.

1886.

# वेदान्तस्यमन्तकः ।



श्रीश्रीश्यामसुन्दर सेवाधिकारिणा

श्रीमद् बलदेव विद्याभूषणेन

विरचितः ।



शान्तिपुर निवासिना

श्रीकालिदास नाथेन संस्कृतः

प्रकाशितश्च ।

श्रीश्रीचैतन्याब्दः ४०० ।



कलिकाता राजधान्यां

बड़बाजारान्तर्गत सूतापटीस्थ ६५ संख्यक भवने

“उचितवक्ता”नाम यन्त्रालये डी॰ पी॰ मिश्रेण

मुद्रितः ।

संवत् १९४२ ।



# वेदान्तस्यमन्तकः।



सनातनं रूपमिहोपदर्शयन्नानन्द सिन्धुं परितः प्रवर्द्धयन्। अन्तस्तमस्तोमहरः स राजतां, चैतन्यरूपो विधुरद्भुतोदयः ॥ १ ॥

प्रमाणैर्विना प्रमेयसिद्धिर्नेत्यतस्तानि तावन्निरूप्यन्ते ;—तत्र प्रत्यक्षमेकञ्चार्वाकः, अनुमानञ्च वैशेषिकः, शब्दञ्च कपिल पतञ्जली, उपमानञ्च गौतमः, अर्थापत्त्यनुपलब्धी च मीमांसकाः, ऐतिह्यसम्भवौ च पौराणिकाः, इति तत्तन्नीर्णयेषु पश्यामः। तदित्थं प्रत्यक्षानुमान शब्दोपमानार्थापत्त्यनुपलब्धिसम्भवैतिह्यान्यष्टौ प्रमाणानि भवन्ति॥ तेष्वथ, सन्निकृष्टमिन्द्रियं प्रत्यक्षं घठमहं चक्षुषा पश्यामीत्यादौ, अनुमितिकरण मनुमानं, गिरिर्वह्निमान् धूमात् इत्यादौ अग्न्यादि ज्ञानमनुमितिः तत्करणं धूमादिज्ञानं, आप्तवाक्यं शब्दः, यथा नदीतीरे पञ्चवृक्षाः सन्ति, यथा चाग्निष्टोमेनस्वर्ग कामोयजेतेत्यादि, उपमिति करणमुपमानं गोसदृशोगवय इत्यादौ, संज्ञा संज्ञि सम्बन्धज्ञानमुपमितिः तत्करणं सादृश्यज्ञानं, अनुपपद्यमानार्थ दर्शनेनोपपादकार्थान्तर कल्पनमर्था-

पत्तिः, पीनो देवदत्तो दिवा न भुंक्ते इत्यादौ इह दिवाऽभुञ्जानस्य पीनत्वमनुपपन्नं सत्तस्य नक्तं भोजित्वं गमयति, घटाद्यनुपलब्ध्या घटाद्यभावो निश्चितः अनुपलब्धीस्तूपलब्धेरभाव इत्यभावेन प्रमाणेन घटाद्यभावो गृह्यते। शतेद्यकं सम्भवतीति बुद्धौ सम्भावनं सम्भवः, अज्ञातवक्तृकतागतपारम्पर्य्यं प्रसिद्धमैतिह्यं, यथेह वटेयक्षो निवसतीत्यादौ, अङ्गुल्युत्तोलनतो घटद्वयकादि ज्ञानकरी चेष्टापि कैश्चिन्मानमिष्यते, एवम्प्रमाणवादिनो विविधाः, तेषु प्रत्यक्षमात्रवादिना चार्वाकेना प्रतिपन्नः सन्दिग्धो विपर्य्यस्तो वा पुमानशक्यो व्युत्पादयितुं न चार्वाग्दृशा प्रत्यक्षेण पुरुषान्तरवर्त्तिनोऽज्ञान सन्देह विपर्य्ययाः शक्याः प्रतिपत्तुं नचानवधृतपरगताज्ञानादिर्वक्तुं प्रवृत्तो ग्राह्यवाक्प्रेक्षावतां तस्मादनिच्छतापितेनानुमानमुपादेयमेव, अतः स परिहस्यते, "चार्व्वाक तव चार्वाङ्गीं जारतो वीक्ष्य गर्भिणीं। प्रत्यक्षमात्र विश्वासघनश्वासं किमुज्झसीति"॥ तेन च परगतानज्ञानादीनभीप्रायभेदाद्वाक्यभेदाल्लिङ्गादनुमाय तदज्ञानादिपरिहारे प्रवृत्तोग्राह्यवाक्स्यादिति, यत्तु शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते अनुमाने गतार्थत्वादिति वैशेषिकं मतमित्याहु स्तन्मन्दं, शब्दचेष्टादावनुमाना प्रवृत्तेः विशेषन्तूपरिवद्यामः, तदेव प्रत्यक्षानुमानशब्दाः प्रमाणानीति वृद्धाः, उपमानादीनामेष्वन्तर्भावात् पृथक्प्रमाणता नेत्याहुः तथाहि, उपमाने

खलु यथागौस्तथागवय इति वाक्यं तज्जनिता च धीरागम एव गवय शब्दो गो सदृश स्याभिधायीति यः प्रत्ययः सोप्यनुमानमेव यः शब्दोवृद्धैर्यत्रार्थे प्रयुज्यते सोऽसति हत्यन्तरे तस्याभिधायी यथा गोशब्दोगोत्वस्य । प्रयुज्यते च गोसदृशो गवयशब्द इति तस्यैव योभिधातीति ज्ञानमनुमानमेव ॥ यत्तु चक्षुः सन्निकृष्टस्य गवयस्य गो सादृश्य ज्ञानं तत् प्रत्यक्ष मेवेति नोपमानं पृथक्त्वाच्यं यत्तु दिवा भुञ्जाने पीनत्वं नक्तं भुक्तिं विनानोपपद्यते अतः पीनत्वान्यथानुपपत्ति प्रसूतार्थापत्तिरेव रात्रिभोजने प्रमाणमितितन्न । तस्यानुमानेऽन्तर्भावात् अयं रात्रौ भुंक्ते दिवाऽभुञ्जानत्वे सति पीनत्वात् यस्तु रात्रौ न भुंक्ते न स दिवाभुञ्जानत्वे सति पीनः यथा दिवारात्रौचाभुञ्जानोऽपीनः नचायं तथा तस्मात्तथेति केवलव्यतिरेकानुमानगम्यमितत् । अनुपलब्धिश्च न पृथक्प्रमाणं घटाद्यभावस्य चाक्षुषत्वात् अभावं प्रकाशयदिन्द्रियं स्वयं बद्धभाव विशेषण मुखेनेति नाप्रसङ्गः । सम्भवस्तु शतेदशकाद्यवगमः स चानुमानमेव शतत्वं हि दशकाद्य विना भूतं शते दशकादि सत्त्वमवगमयतीति । ऐतिह्यन्त्वनिर्द्दिष्टवक्तृकत्वेन सांशयिकत्वान्नप्रमाणं, आप्तवक्तृकत्वे निश्चितेतु तस्यागमान्तर्भाव एवेति त्रीण्येवप्रमाणानि ।

प्रत्यक्षञ्चानुमानञ्च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितं कार्य्यं धर्म्मशुद्धिमभीप्सतेति ॥

तत्र प्रत्यक्षं स्थूलमेव सन्निकृष्टं गृह्णाति नातिदूरं नचातिसमीपं यथा खमुत्पतन्तं पक्षिणं, यथा च नेत्रस्य मञ्जनं, मनस्यनवस्थिते स्थूलमपि तन्नगृह्णाति, यदुक्तं मे मनोऽन्यत्रगतं मया न दृष्टमित्यादि, अभिभूतमनुद्भूतञ्च संप्रकृमतिसूक्ष्मञ्च तन्नगृह्णाति, यथा रविकिरणाभिभूतं ग्रहनक्षत्रमण्डलं, यथा क्षीरेदधिभावं, यथा च जलाशये जलदविमुक्तान् जलबिन्दून्, यथा प्रत्यक्षं सन्निकृष्टमपि परमाणून् क्वचिद्व्यभिचरतिचैतत्, मायासूर्य्यावलोके यत्नदत्तस्यैवायं सूर्य्यत्वादौ, यद्यप्य प्रत्यक्षेऽपि वस्तुनि लिङ्गादनुमानं प्रवर्त्तयितुमलं, तथापि तत् क्वचिद्व्यभिचरद्दृष्टं वृष्ट्यातत्कालनिर्वापितवह्नौ चिरमधिकौ दिवसः धूमे पर्वते। वह्निमान् धूमादित्यादौ तदेवं मुख्ययो रनयो र्व्यभिचारित्वात्, तदन्येषान्तु तदुपजीविनां सुसिद्धं तत्। आप्त वाक्यलक्षणः शब्दस्तु कुत्रापि न व्यभिचरति, हिमालये हिमं, रत्नालये रत्नमित्यादि, रविकान्ताद्रविकरसंयोगेवह्निरुत्तिष्ठतीत्यादिः, स खलु तन्निरपेक्षस्तदुपमर्द्दीतदविरोधस्तत् सचिवस्तदनुग्राही तदगम्यसाधकतमश्च दृष्टः, तथाहि दशमस्त्वमसीत्यादौ तन्निरपेक्षः स एव शब्दः श्रोत्रं प्रविशन्नेव दशमोऽहमस्मीति प्रमायास्तिरस्कारिणं मोहं बिनिवर्त्तयतीति तत्त्वं स्पष्टं, सर्पदंष्टे त्वयि विषं नास्तीति मन्त्र इत्यादौ, वह्नि तप्तमङ्गं वह्नितापेन साम्यतीत्यादौ, च तदुपमर्द्दकत्वं ; सौवर्णभसितं

स्निग्धमित्यादौ एकमेवौषधं त्रिदोषघ्नमित्यादौ च स्वप्रतिपादिते ताभ्यामविरोधत्वञ्च, अग्निर्हिमस्य भेषजमित्यादौ, हीरकगुणविशेषमदृष्टवद्भिः पार्थिवत्वेन सर्वं पाषाणादिद्रव्यं लौहच्छेद्यमित्यनुमातुं शक्यं न तु श्रुततादृशगुणकं हीरकं तच्छेद्यमित्यादौ च यथाशक्तिताभ्यां साचिव्यकरणं दृष्टचर मायामूर्द्ध्नि पुंसोऽभ्रान्त्याप्यविश्वस्ते स एवायमित्याकाशवाण्यादौ लौहच्छेद्यं पाषाणादौ, अरे शीतार्त्ताः पान्यामाश्मिन् वह्निं सम्भावयत दृष्टमस्माभिरत्रासौ व्रज्याधुने व निर्वाणः किंत्वस्मिन् धूमोद्गारिणि गिरौसोऽस्तीति तेनैव ते बद्धमूले प्रतीते तच्छब्दस्य साधकतमत्वञ्च, ग्रहाणां राशि सञ्चारे सूर्योपरागादौच तदेवं सर्वतः श्रेष्ठं शब्दस्यस्थिते तत्वनिर्णायकस्तु श्रुतिलक्षण एव न त्वार्षलक्षणोऽपि "नावेदविन्मनुतेतं वृहन्तमौपनिषदं पुरुषं पृच्छामीत्यादिश्रुतिभ्यः" ऋषीणांमिथो विवाद दर्शनेन तदाख्यानांतन्निर्णायकत्वा सम्भवात्, नित्यः श्रुतिशब्दः वाचाविरूप नित्येति श्रवणात् "अनादिनिधनानित्यावागुत्सृष्टास्वयंभुवा। आदौ वेदमयी विद्यायतः सर्वाः प्रवृत्तयः।" इत्यादि स्मरणाच्च भ्रमादिदोषविशिष्ट जीवकर्तृकत्व विरहान् निर्दोष श्च स एव भवति॥

इतिवेदान्तस्यमन्तके प्रमाणनिर्णयः

प्रथमः किरणः॥ १॥

# अथ प्रमेयाणि निर्णीयन्ते ।

तानि च पञ्चधा ; ईश्वरजीव प्रकृतिकालकर्मभेदात् तत्र विभुः विज्ञानानन्दः सार्वज्ञादि गुणवान् पुरुषोत्तम ईश्वरः "विज्ञानमानन्दं ब्रह्म," सत्यंज्ञानमनन्तं ब्रह्म" यः सर्वज्ञः सर्ववित् सत्यकाम सत्यसङ्कल्पः स उत्तमः पुरुष" इत्यादि श्रवणात्, स च सर्वेषां स्वामीज-निविनाशशून्यः । तमीश्वराणां परमं महेश्वरं, तं दैवतानां परमञ्च दैवतं । पतिं पतीनां परमं परस्ताद्विदामदेवं भुव-नेशमीड्यमिति ॥ स कारणानां कारणाधिपाधिपो, नचास्य कश्चिज्जनिता न चाधिप । इति च श्रवणात् ; तस्यैवंभूतस्य क्वचित् जन्मत्व हीनस्वरूपस्वभावस्याविर्भावमात्रं बोध्यम् । अजायमानो बहुधा बिजायते इति श्रुतेः । अजोऽपि सन्न-व्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममाययेति ॥ स्मृतेश्च । अतएव इहास्य बिज्ञानात् मुक्तिरित्युक्तं । "जन्मकर्म्म च मेदिव्यमेवं योवेत्ति तत्वतः । त्यक्तादेहं पुनर्जन्मनैतिमामेतिसोर्जुनेति" ॥ ननु ब्रह्मरुद्राद-योपि लोकेश्वराः कथ्यन्ते सत्यं भवन्तु ते ईश्वराः सामर्थ्ययो-गात् पारमैश्वर्य्यन्तु हरेरेवतमीश्वराणामित्यादि श्रुतेः । ततश्च राजसेवकेष्वपि राज वत्तेधीश्वरत्वन्तद्गुणाश्रयो-गाद्रात्तं सिध्यति । ब्रह्मादयो हि हरेरुत्पन्नाः श्रूयन्ते श्रीनारायणोपनिषदि अथपुरुषो ह वै नारायणो अहं

कामयत प्रजाः सृजेयेत्यारभ्य नारायणाद् ब्रह्मा जायते, नारायणाद्रुद्रो जायते, नारायणात् प्रजापतिः प्रजायते, नारायणादिन्द्रो जायते, नारायणादष्टौ वसवो जायन्ते नारायणादेकादशरुद्राजायन्ते, नारायणाद् द्वादशादित्या इत्यादिना । महोपनिषदि च एको: ह वै नारायण आसीन् न ब्रह्मा न ईशान इत्यारभ्य तस्य ध्यानान्तस्थस्य ललाटात्त्र्यचः शूलपाणिः पुरुषोऽजायत बिभ्रच्छ्रियं सत्यं ब्रह्मचर्य्यं तपो वैराग्यमित्यादि तत्रब्रह्माचतुर्मुखो जात इत्यादि च श्रुयते नारायणशब्दः खलु श्रीपतेरेवसंज्ञा पूर्वपदात्संज्ञायामग इति तस्यामेव णत्व बिधानात् । श्रीबिष्णुपुराणे च "यस्य प्रसादादहमच्युतस्य, भूतः प्रजासृष्टि करोऽन्तकारी । क्रोधाच्चरुद्रः स्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्तादित्यादि ।" मोक्षधर्मे च, प्रजापतिञ्च रुद्रं चाप्यहमेब सृजामिवै । तौ हि मां न विजानितो ममाया बिमोहिताविति ॥ छन्दोगास्तु रुद्रं बिधिपुत्रं पठन्ति । बिरुपाचायधातंशाय बिश्वदेवाय सहस्राचाय ब्रह्मणः पुत्राय जेष्ठाया सौवाय कर्म्माधिपतये इति । शतपथे चाष्टसूत्रे ब्राह्मणे संबत्सरात् कुमारोऽजायत कुमारो रोदित्, तं प्रजापतिरब्रवीत्, कुमार ! किं रोदिषि ? यच्च ममतपसो जातोसीति सोऽब्रवीत् । अनपहतपाप्माहमस्मि हन्त नामानि मे देहीत्यादिना । श्रीवाराहे च "नारायणः परो देवस्तस्माज्जातश्चतुर्मुखः । तस्माद्रुद्रो भवद्देवः स च सर्व-

न्नताङ्गत इति ॥ तदिदञ्च कल्पभेदात् संगमनीयं। ननु महेशादि समाख्यया रुद्रपारतम्यं मन्तव्यं मैवं तस्या-महेन्द्रादि समाख्यावद्दैफल्यात् इन्द्रसमाख्यैव शक्रस्य तत्साधयेत्। इति परमैश्वर्य्ये इति धात्वर्थपाठात्। किं पुनर्महत्व विशेषितासौ तस्यानीश्वरत्वं सर्वाभ्युपगतं ऐश्वर्य्यञ्च कर्मायत्वं शतमखसमाख्ययावगम्यते। एवं महादेवसमाख्यापि देवराज समाख्यावद्बोध्या तथा च प्रबल प्रमाण बाधात् सा साच निष्फलैव महा-ब्रह्म समाख्यावद्भवेत्। विधिरुद्रयोर्यन्न पुरुषाराध-नालोकाधिकारित्वं भारतेस्मर्य्यते। युगकोटि सह-स्राणि विष्णुमाराध्यपद्मभूः। पुनस्त्रैलोक्यधातृत्वं प्राप्त-वानितिशुश्रुम इति। मयासृष्टः पुरा ब्रह्मामद्यज्ञ मयजत् स्वयम्। ततस्तस्य वरान् प्रीतो ददावहमनुत्तमान्॥ मत्-पुत्रत्वञ्च कल्पादौ लोकाध्यक्षत्वमेव चेति। युधिष्ठिर शोकापनोदने च॥ विश्वरूपो महादेवः सर्वमेधे महा-क्रतौ। जुहाव सर्वभूतानि स्वयमात्मानमात्मनेति। महा-देवः सर्वमेधे महात्मानुत्वात्मानं देवदेवो बभूव। वि-श्वाल्लोकान् व्याप्टभ्य कीर्त्याविराजतेद्युतिमान् कृत्ति-वासा इति। पशुपतित्वञ्च रुद्रस्य वरायत्तं श्रुतिराह। सोऽब्रवीद्वरं वृणीष्व। अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपतिरिति। वेदापहारापद्रचा च विधेर्हरि कार्व्वकेवेति पाद्मे पठ्यते। विधिव्रधपापा

दृष्टी हरिणा मोचित इतिस्मर्य्यते मात्स्येरुद्रोक्तिः । ततः क्रोध परीतेन संरक्तनयनेन च । बामाङ्गुष्ठ नखाग्रेण छिन्नं तस्य शिरोमयेति ॥ ब्रह्मोक्तिश्च, यस्मादनपराधस्य शिरः छिन्नं त्वया मम । तस्माच्छाप समायुक्तः कपालीत्वं भविष्यसीति ॥ रुद्रोक्तिश्च, ब्रह्महाकुपितो भूत्वा चरन्तीर्थानि भूतले । ततोऽहं गतवान् देवि हिमवन्तं शिलोच्चयं । तत्र नारायणः श्रीमान् मयाभिक्षां प्रयाचितः । ततस्तेनस्वकं पार्श्वं नखाग्रेण बिदारितम् । महत्य स्रवतीधारातस्य पार्श्वे बिनिःसृता । विष्णुप्रसादात् सुश्रोणि ! कपालं तत् सहस्रधा । स्फुटितं बहुधायातं स्वप्नलब्धधनं यथेति । दुर्जय त्रिपुरहेतुकापन्निस्तारो हरिहेतुकः स्मर्य्यते भारते । विष्णुरात्माभगवतो भवस्यामित तेजसः । तस्माद्धनुर्ज्या-संस्पर्शं स विषेहे महेश्वरः । इति । बिष्णुधर्मे च, त्रिपुरं जघ्नुषः पूर्वं ब्रह्मणा बिष्णुपञ्जरं । शङ्करस्य कुरुश्रेष्ठरक्ष-णाय निरूपितमिति ॥ जृम्भणास्त्रेणबाणयुद्धापत्तितो रचितःस्मर्य्यते बैष्णवे । जृम्भणास्त्रेण गोविन्दो जृम्भयामास शङ्करं । ततः प्रणेशुर्दैतेयाः प्रथमाश्च समन्ततः । जृम्भाभिभूतस्तु हरो रथोपस्थ उपाविशत् । न शशाक तदा योद्धुं कृष्णं नाक्लिष्टकर्मणेति ।

श्रीरामायणे परशुरामोक्तिः, हुङ्कारेण महाबाहुस्त-म्भितोऽथ त्रिलोचनः । जृम्भितं तद्धनुर्दृष्ट्वा शैवं विष्णु-पराक्रमे । अधिकं मेनिरे बिष्णुं देवाः सर्षिगणास्तदेति ।

नरसखेन नारायणेन सहयुद्ध्यमानस्तेन संजिहीर्षितो ब्रह्मणाप्रबोधितः प्रपत्त्या तेन संरचितः स्मर्य्यते भारते, प्रसादयामास भवो देवं नारायणं प्रभुं । शरणञ्च जगा-माद्यं वरेण्यं वरदं हरमित्यादिना, कालकूटान्निस्तारय तत् कीर्त्तनादिति स्मर्य्यते । अच्युतानन्दगोविन्द मन्त्रमा-नुष्टुभं परम् । औं नमः संपुटीकृत्य जपन् विषधरो हर इति ॥ सर्वेश्वरादन्ये तु सर्वे ब्रह्मादयः प्रलये विनश्य-न्तीति मन्तव्यं । एको ह वै नारायण आसीदित्यादि श्रव-णात् । ब्रह्मादिषु प्रलीनेषु नष्टे लोके चराचरे । आभूत संप्लवे प्राप्ते प्रलीने प्रकृतौ महान्, एकस्तिष्ठति सर्वात्मा स तु नारायणः प्रभुरिति भारतात् ।

ब्रह्माशम्भुस्तथैवार्कश्चन्द्रमाश्च शतक्रतुः ।
एवमाद्यास्तथैवान्ये युक्ताबैष्णव तेजसा ॥
जगत् कार्य्यावसाने तु वियुज्यन्ते च तेजसा ।
वितेजसश्चते सर्वे पञ्चत्वमुपयान्तिवै ॥

इति विष्णुधर्म्मात् ।

प्रकृतिर्मायया‌ख्याता व्यक्ताव्यक्त स्वरूपिणी ।
पुरुषश्चाप्युभावे तौ लीयेते परमात्मनि ॥
परमात्मा च सर्वेषामाधारः पुरुषः परः ।
स विष्णुनामावेदेषु वेदान्तेषु च गीयते ॥

इति वैष्णवाच्च ।

नष्टे लोके द्विपरार्द्धावसाने महाभूतेष्वादि भूतंगतेषु

व्यक्तेऽव्यक्तं कालवेगेन याते भवानेकः शिष्यते शेषसंज्ञः॥

इति श्रीभागवताच्च।

तथाच हरि हेतुकोत्पत्त्यादिभिर्विध्यादीनामनीशत्वं निर्बाधं सिद्धं। अतएव तद्भक्तिस्तैरनुष्ठीयते।

अत्रापि यत्पादनखावसृष्टं जगद्विरिञ्चोऽपहृतार्हणाम्भः।
शेशं पुनात्यन्यतमो मुकुन्दात् को नामलोके भगवत्पदार्थः॥

इति।

यच्छौच निःसृत सरित्प्रवरोदकेन, तीर्थेन मूर्द्ध्यधिकृतेन शिवः शिवोभूत् इति च श्रीभागवतात्। एकः प्रसारयेत्पादावन्यः प्रक्षालयेन्मुदा। परस्तु शिरसाधत्ते तेषु कोऽभ्यधिकोवदेति। पुराणान्तराच्च।

ब्रह्मादयः सुराः सर्वे विष्णुमाराध्यते पुराः।
स्वं स्वं पदमनु प्राप्ताः केशवस्य प्रसादतः॥

इति नारसिंहाच्च।

ते देवाः ऋषयश्चैव नानातनु समाश्रिताः।
भक्तासंपूजयन्त्येनं गतिञ्चैषां ददातिस॥

इति नारायणीयाच्च।

यत्तु, भवाङ्ग पतितं तोयं पवित्रमितिपस्पृशुरिति। शिवाङ्गस्पर्शाद् गङ्गाम्भसः पावित्र्यं मन्यन्ते तन्मन्दं उक्तवाक्येभ्यः तेन शिरसाधृतत्वात् पवित्रमिदमिति विज्ञाय-पस्पृशुरिति तदर्थाच्च। हरस्य गात्र संस्पर्शात् पवित्रत्व-मुपागतेत्यत्रापि तस्य पावित्र्यं शुद्धिप्रदत्वं प्राप्तेत्यर्थः

यत्तु साम्बलाभाय हरेरुद्राराधनं, पार्थविजयाथ तत्स्तवनञ्च भारतेऽस्मर्य्यते। तत्तु नारदाद्याराधनवल्लीलारूपमेव बोध्यम्। यत्तु द्रोणपर्वान्ते शतरुद्रीयार्थं रुद्रं व्याचक्षाणो व्यासस्तस्य परमकारणत्वं प्राह तत्खलु तदन्तर्य्यामि परतयाज्ञेयं, परब्रह्मद्वयाभावात्, तद्दयस्यानिष्टत्वाच्च। तदित्थं हरेः पारतम्ये सिद्धे केषु चित्पुराणेषु विध्यादीनां पारतम्यं निशम्य न भ्रमितव्यं। तेषां राजस तामसत्वेन हेयत्वात्, यदुक्तं मात्स्ये

संकीर्णास्तामसाश्चैव राजसाः सात्विकास्तथा।
कल्पाश्चतुर्विधाः प्रोक्ता ब्रह्मणो दिवसाहिते॥
यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणापुरा।
तस्य तस्य तु माहात्म्यं तत्तत्कल्पे विधीयते॥
अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्त्यते।
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः॥
संकीर्णेषु सरस्वत्याः पितॄणाञ्च निगद्यते।
सात्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः॥
तेष्वेवयोग संसिद्धागमिष्यन्ति पराङ्गतिमिति।

कौर्म्मे च।

असंख्यातास्तथाकल्पा ब्रह्मविष्णु शिवात्मकाः।
कथिताहि पुराणेषु मुनिभिः कालचिन्तकैः।
सात्विकेषु तु कल्पेषु माहात्म्यमधिकं हरेः॥
तामसेषु शिवस्योक्तं राजसेषु प्रजापते रिति।

वेदविरोधिस्मृतीनां हेयत्वं मनुराह
"या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्यतमोनिष्ठाहि ताः स्मृता इति

तदेवं सात्विकानामेव पुराणादीनां प्रमाजनकत्वादुपादेयत्वन्तदन्येषान्तु विपर्य्यासकरत्वादेव हेयत्वंसुव्यक्तमिति नते भ्रमितव्यं सुधियेति। तस्य हरेस्तिस्रः शक्तयः सन्ति; पराख्या क्षेत्रज्ञाख्या मायाख्या चेति। "परास्य शक्तिर्बिविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारबन्धस्थितिमोक्षहेतुरिति" श्रुतेः।

विष्णुशक्तिः परा प्रोक्ताक्षेत्रज्ञाख्या तथापरा।
अविद्याकर्मसंज्ञान्या तृतीयाशक्तिरिष्यते॥

इति श्रीविष्णुपुराणाञ्च।

स च पराख्यशक्तिमद्रूपेण जगन्निमित्तं, क्षेत्रज्ञादिशक्तिमद्रूपेण तु तदुपादानञ्च भवति, तदात्मानं स्वयमकुरुतेत्यादि श्रवणात्। स च देहदेहिभेदशून्यो हरिरात्ममूर्त्तिर्बोध्यः।

सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरं।
द्विभुजं मौनमुद्राढ्यं वनमालिनमीश्वरम्॥

साक्षात्प्रकृतिपुरुषयोरयमात्मागोपालस्तमेकं गोविन्दं सच्चिदानन्दविग्रहं। अद्वैमात्रात्मको रामो ब्रह्मानन्दैकविग्रह इति श्रुतेः। तस्य गुणाश्च, ज्ञानानन्दादयोनन्ता-

स्ततोनातिरिच्यन्ते एकधैवानुद्रष्टव्यं नेहनानास्तिकिञ्च-नेत्यादि श्रवणात् । तथापि विशेषवलात्तद्भेदव्यवहारो भवति विशेषश्च भेदप्रतिनिधिर्भेदाभावेपि तत्कार्यं प्रत्याययन् दृष्टः सत्तासतीभेदोभिन्नः कालः सर्वदास्ती-त्यादौ । तमन्तराविशेषणविशेष्यभावादिकं न सम्भ-वेत् न च सत्तासतीत्यादिधीर्भ्रमः सन् घट इत्यादि-वद्बाधात् न चारोपः सिंहोमाणवको नेत्यादि-बत् सत्तासतीनेतिकदाप्यव्यबहारात् न च सत्तादेः सत्ताद्यन्तराभावेपि स्वभावादेव सतीत्यादिव्यवहारः तस्यैवेह तच्छब्देनोक्तेः तस्मान्निर्भेदेपि हरौ भेदप्रतिनिधिः सोभ्युपेयः यथोदकं दुर्गेवृष्टं पर्वतेषु विधावति । एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावतीति कठश्रुतेः अत्र हि ब्रह्म-धर्मानुज्ञातद्भेदो निषिद्धः नहिभेदसद्भावे तस्मिन्न सति धर्म-धर्मिभावधर्मबहुत्वे भाषितुं युक्ते, नच धर्मानित्यनुवादः श्रुतितोन्येन तेषामप्राप्तेः निर्विशेषवादिनापि शोधितात्त्वं पदार्थाद्वाक्यार्थस्यैक्यस्य भेदो नाभिमतो भेदाभेदौ वा तथा सति तस्यमिथ्यात्वाद्यापत्तेः तत्र विशेषो न चेत् स्वप्रकाश-चिद्धानेष्यैक्यस्याभानन्तद्भानस्य भेदभ्रमाविरोधित्वेप्यैक्य-भानस्यतद्विरोधित्वञ्चेत्यादि भेदकार्यं तस्य कथंस्यात् ? त-स्मात् स च वस्त्वभिन्नः स्वनिर्वाहकश्चेति नानवस्था तस्य तादृकत्वं धर्मिग्राहक प्रमाण सिद्धं बोध्यं स च परमात्मा हरिरस्मदर्थाबोध्यः अहमात्मा गुडाकेशेत्यादिष्वात्माहमर्थ-

योरभेदेन स्मरणात् "सोऽकामयत बहुस्यां प्रजायेत्यादि श्रुतौ" अहमेवासमेवाग्रे नान्यद्यत्सदसत्परं। पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहमिति स्मृतौ चावधृत्या च शुद्धात्मनोऽस्मदर्थत्वमुक्तं अतोऽन्तेऽपिस्थितिवाक् युज्यते अतएव प्रपञ्चमायानिरासकता मुक्तप्राप्यता च तस्योक्ता मामेव ये प्रपद्यन्ते मायामेतान्तरन्ति ते। ततो मां तत्त्वतोज्ञात्वा विशते तदनन्तरमित्यादौ तस्मादहमर्थः परात्माविशुद्धः स एव कर्त्ताभोक्ता च बोध्यः स विश्वकृद्विश्वकृदात्मयोनिरेषदेवोविश्वकर्मा महात्मा सोऽश्नुते सर्वान् कामान् सहब्रह्मणाविपश्चितेतिश्रुतिः।

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः॥ इति स्मृतेश्च।

भक्त्याप्रयच्छतीत्युक्तेर्भक्तेच्छयैव तस्यपूर्णस्यापिवुभुक्षोद्योऽभिमतः तस्यतादृगत्वञ्च स्वेच्छामयस्येति ब्रह्मोक्तेः स च पुरुषोत्तमः क्वचिद्द्विभुजः क्वचिच्चतुर्भुजः क्वचिदष्टभुजश्च पठ्यते तत्र द्विभुजो यथाऽथर्वमूर्द्धि सत्पुण्डरीकनयनमित्यादि

प्रकृत्यासहितः श्यामः पीतवासा जटाधरः।
द्विभुजः कुण्डली रत्नमाली धीरोधनुर्धर इति
तैत्तिरीयके च।

दशहस्ताङ्गुलयो दशपद्याद्यावूरुद्वौबाहू आत्मैव पञ्चविंशक इति रहस्याम्नाये च पाणिभ्यां श्रियं संवहतीत्यादिना श्रीसात्वते च

नादावसाने गगने देवोनन्तः सनातनः।
शान्तः सवित्स्वरूपस्तु भक्तानुग्रह काम्यया॥
अनौपम्ये न वपुषाह्यमूर्त्तोमूर्त्तांगतः।
विश्वमाप्यायथन् कान्त्या पूर्णेन्दुयुततुल्यया॥
वरदाभयदेनेव शङ्खचक्राङ्कितेन च।
त्रैलोक्यधृतिदक्षेण युक्तपाणिद्वयेन स॥ इति।

सङ्कर्षणे च।

एकषोत्तमस्य देवस्य विशुद्धस्फटिकत्विषः।
समपादस्य तस्यैव ह्येकवक्त्रस्य संस्थितिः॥
वरदाभयहस्तौ द्वावपवृत्ताख्य कर्मणे इति॥

चतुर्भुजो यथा विष्वक्सेनसंहितायाम्

अप्राकृततनुर्देवो नित्याकृति धरो युवा।
नित्यातीतो जगद्धाता नित्यैर्मुक्तैश्च सेवितः॥
बद्धाञ्जलिपुटैर्हृष्टैर्निर्मलैर्निरुपद्रवैः।
चतुर्भुजः श्यामलाङ्गः श्रीभूलीलाभिरन्वितः॥
विमलैर्भूषणैर्नित्यैर्भूषितो नित्यविग्रहैः।
पञ्चायुधैः सेव्यमानः शङ्खचक्रधरो हरिः इति॥

श्री दशमे च

तमद्भुतं बालकमम्बुजेक्षणं
चतुर्भुजं शङ्खगदाद्युदायुधं।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं
पीताम्बरं सान्द्रपयोदसौभगंसित।

श्रीगीतासुच तेनैवरूपेण चतुर्भुजेन सहस्रबाहो भव-विश्वमूर्त्ते इति। अष्टभुजोयथा चतुर्थे।

पीनायताष्टभुजमण्डलमध्यलक्ष्म्या,
स्पर्द्धच्छ्रिया परिवृतो वनमालयाद्यः।
बर्हिष्मतः पुरुष आह सुतान् प्रपन्नान्,
पर्ज्जन्यनादरुतया स घृणावलोक इति॥

आनन्दाख्यसंहितायान्तु रूपत्रयमुक्तम्।

स्थूलमष्टभुजं प्रोक्तं सूक्ष्मञ्चैव चतुर्भुजं।
परन्तु द्विभुजं प्रोक्तं तस्मादेतत्त्रयं यजेत्॥ इति

एतानि रूपाणि भगवति वैदूर्य्यमणिवद्युगपन्नित्या-विर्भूतानि विभान्ति तेषु चारुत्वाधिक्यात् कृतज्ञगुणव्यक्त्या च द्विभुजस्य परत्वमुक्तं न तु वस्त्वन्यत्वमस्ति नेह नानास्ति किञ्चनेत्यादि वचनात् यत्तु सत्यन्ते परमव्योम्निनित्योदितञ्च चतुर्भुजं रूपं परं द्विभुजादिरूपन्तु शान्तोदितमपरमिति तत्खल्वविचारिताभिधानमेव।

सर्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः।
हानोपादानरहिता नैव प्रकृतिजाः क्वचित्॥
परमानन्दसन्दोहा ज्ञानमात्राश्च सर्वतः।
सर्वे सर्वगुणैः पूर्णाः सर्वदोषविवर्जिताः॥

इति महावराहोक्तिव्याकोपात्

परन्तु द्विभुजमितिकण्ठोक्ति विरोधात्मायिकद्वान्त-स्पर्शापत्तेश्च भेदहीनेष्वेव तेषु रूपेष्वंशित्वांशत्वादिकं शक्ति

व्यक्ति तारतम्यसव्यपेक्ष्यमाहुः यदुक्तं हन्ते: शक्तोर्व्यक्तिस्तथा-व्यक्तिस्तारतम्यस्य कारणमिति स च पुरुषोत्तमः श्रीपति-र्बोध्यः श्रीश्वते लक्ष्मीश्च पत्नावििति यजुः श्रुतिः कमलापतये नमः रमामानसहंसाय गोविन्दाय नमोनमः रमाधवाय-रामायेत्यथर्वण श्रुतिश्च पूर्वत्र श्री र्गौ र्देवीलक्ष्मीस्तुरमा-देवीति व्याख्यातारः ननुनेहनानास्तिकिञ्चनेत्यादि श्रव-णान्न ब्रह्मणिकश्चिल्लक्ष्म्यादिरूपोविशेषः शक्योमन्तुं किन्त्व-ङ्गीकृतश्चायं विशुद्धसत्वमूर्त्तिकं तत्ताहृश्यैवलक्ष्म्या गिरा च युज्येतेतिचेद्भ्रान्तमेतत् वह्न्युष्णतेव स्वरूपाभिन्नापराख्या शक्तिर्ब्रह्मणस्ति परास्येत्यादि श्रुतेः सैव तस्य लक्ष्मी र्गौर्देवी चेतिस्वीकार्यं। प्रोच्यते परमेशोयो यः शुद्धोप्युपचारतः। प्रसीदतु स नो विष्णुरात्मा यः सर्वदेहिनामिति श्रीवैष्ण-वात् अपरन्त्व चरं या सा प्रकृतिर्जड़रूपिणी। श्रीः परा-प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रयेतिस्कान्दाच्च।

सरस्वतीं नमस्यामि चेतनां हृदि संस्थिताम्।
केशवस्य प्रियां देवीं शुक्लां चेमप्रदां नित्यामिति॥
स्कान्देगीः स्तोत्राच्च।

इत्थञ्च पूर्वपक्षो निरस्तः। ननु नेहनानास्ति किञ्चनेति निर्विशेषत्वमुक्तं मैवं इह यदस्ति तन्नाना न किन्तु स्वरू-पानुबन्ध्येवेति, तत्रैव विशेषप्रत्ययात् श्रीश्वते लक्ष्मी-श्चेत्यादेः प्रामाण्याच्च लक्ष्म्या एव रूपान्तरं गीर्देवीति मन्तव्यं सन्ध्या रात्रिः प्रभा भूतिर्मेधा श्रद्धा सरस्वतीति

श्रीवैष्णवे तस्या विशेषणात्। किञ्च ह्लादिनी सन्धिनी संवित्त्वय्येका सर्वसंश्रये। ह्लादतापकरीमिश्रा त्वयि नो गुणवर्जित इति। तत्रैव विद्वत् परा कीर्त्त्यते तस्य संवित् प्रधानावृत्तिर्गौर्देवी। ह्लादप्रधानातु लक्ष्मीः अनयोः पूर्वा मुत्तरानुगुणैर्बोध्या संविदः सुखानुधावन प्रसिद्धेः लक्ष्म्या-भगवदभेदादेव तद्वत्तस्याव्याप्तिश्च तत्रैव स्मर्य्यते नित्यैव-साजगन्माताविष्णोः श्रीरनपायिनी। यथासर्वगतो विष्णु-स्तथैवेयं द्विजोत्तमेति॥ तताभेदे तु व्याप्तिरियमपसि-द्धान्ता घटेत इत्यद्वास्या जीवकोटित्वं निरस्तं॥ सा लक्ष्मी र्हरिवदनन्तगुणा तत्रैवोक्ता न ते वर्णयितुं शक्ता गुणान् जिह्वापि वेधसः। प्रसीद देवि पद्माक्षि मा स्वांस्याक्षीः कदाचनेति। ते च गुणा मुक्तिदातृत्वहरिवशीकारित्वा-दयः कतिचित्तत्रैव पठिताः।

आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी।
कात्वन्या त्वामृते देवि सर्वयज्ञमयं वपुः॥
अध्यास्ते देवदेवस्य योगिचिन्त्यं गदाभृतः।
त्वया देवि परित्यक्तं सकलं भुवनत्रयम्॥
विनष्टप्रायमभवत् त्वयेदानीं समेधितम्।
दाराः पुत्रास्तथागारं सुहृद्धान्यधनादिकम्॥
भवत्येतन्महाभागे नित्यं त्वद्वीक्षणान् नृणाम्।
शरीरारोग्यमैश्वर्य्यमरिपक्षक्षयः सुखम्॥
देवित्वद्दृष्टिदृष्टानां पुरुषाणां न दुर्ल्लभम्।

सत्त्वेन सत्यशौचाभ्यां तथाशीलादिभिर्गुणैः ॥
त्यज्यन्ते ते नराः सद्यः सन्त्यक्ता ये त्वयामले ।
त्वयावलोकिताः सद्यः शीलाद्यैरखिलैर्गुणैः ॥
कुलैश्वर्यैश्च युज्यन्ते पुरुषानिर्गुणा अपि ।
सश्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान् ॥
स शूरः स च विक्रान्तो यस्त्वया देवि वीक्षितः ।
सद्यो वैगुण्यमायान्ति शीलाद्याः सकला गुणाः ॥
पराङ्मुखी जगद्धात्रि यस्य त्वं विष्णुवल्लभे ॥

इत्यादिना हरिवद्बहुरूपेयं सर्वत्र तदानुरूप्येण तमनुयातीति च तत्रैवोक्तं देवत्वे देवदेहेयं मानुषत्वे च मानुषी । विष्णोर्देहानुरूपां वै करोत्येषात्मनस्तनु मिति ॥ तेषु सर्वेषु लक्ष्मीरूपेषु राधायाः स्वयं लक्ष्मीत्वं मन्तव्यं । सर्वेषु भगवद्रूपेषु कृष्णस्य स्वयं भगवत्त्ववत् । पुरुषबोधिन्यामथर्वोपनिषदि गोकुलाख्ये माथुरमण्डले इत्युपक्रम्य द्वे पार्श्वे चन्द्रावली राधिकाचेत्युक्ता यस्या अंशे लक्ष्मीदुर्गादिका शक्तिरित्यभिधानात् । निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः । इति भागवते श्रीशुकोक्तेः । बृहद्गौतमीये च तन्मन्त्रकथने । देवि कृष्णमयी प्रोक्ता राधिका परदेवता । सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनीपरेत्युक्तेश्च । एतेचांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमिति । अष्टमस्तु तयोरासीत् स्वयमेव हरिः किलेति च श्रीभागवतात् ।

इति श्रीवेदान्तस्यमन्तके सर्वेश्वरतत्त्व निर्णयो

द्वितीयः किरणः।

---

## अथ जीवो निरूप्यते

तल्लक्षणं चाणुचैतन्यमाहुः श्रुतिश्च एषोऽणुरात्मा चेतसा- वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश।

बालाग्रशतभागस्य शतधा कल्पितस्य च।

भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते॥

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। तं पीठस्थं ये तु यजन्ति विप्रास्तेषां शान्तिः शाश्वती नेतरेषामिति श्रवणात्।

एतेन भ्रान्तं ब्रह्मैवैको जीवस्तदन्ये सर्वे जीवादयस्तदविद्यया कल्पिताः स्वप्नद्रष्टेव रथादय इत्येक जीववादे निरस्तः। नित्यचेतनतया बहूनां जीवानां श्रुतत्वात्। स च जीवो नित्यज्ञानगुणकः अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मेति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इति च श्रुतेः। अणोरपि तस्य ज्ञानगुणेन सर्वाङ्गेषु व्याप्तिः। गुणाद्वालोकवदिति सूत्रात् यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथा

कृत्स्नं प्रकाशयति भारतेति भगवद्वाक्याच्च अस्मदर्थश्च जीवात्मा बोध्यो विलीनाहङ्कारायां सुषुप्तावहमिति तत्स्वरूपविमर्शात्। तथा च श्रुतिः। सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति। देहादिविलक्षणश्च षड्भावविकारशून्यश्च सः। नात्मा वपुः पार्थिवमिन्द्रियाणि, देवाह्यसुर्वायु जलं हुताशः। मनोऽनुमात्रं धिषणा च सत्व महंकृतिः खं क्षितिरर्थसाम्यमिति। नात्माजजाननमरिष्यति नैधतेऽसौ न क्षीयते सवन विद्व्यभिचारिणां हि। सर्वत्रशश्वदनपाय्युपलब्धिमात्रं प्राणो यथेन्द्रियबलेन विकल्पितं सदितिचैकादशात्। परमात्मांशश्च सः। ममैवांशो जीवलोके जीवभूतः सनातन इति भगवद्वाक्यात्। कर्त्ता भोक्ता च सः विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चेति सोऽश्नुते सर्वान् कामानिति च श्रवणात्। यत्तु प्रकृतिः कर्त्री, भोक्तातु जीव इत्याहुस्तन्नन्दं कर्तृत्वभोक्तृत्वयो रेकनिष्ठत्वात् यदाह वनपर्वणि सोमकं यमः नान्यः कर्त्तुः फलं राजन्नुपभुङ्क्ते कदाचनेति।

ननु कर्तृत्वे दुःखासम्बन्धात् न तत्र श्रुतेस्तात्पर्य्यमिति चेन्मैवमेतत्। तथा सति दर्शादिष्वप्य तात्पर्य्यापत्तेः लीलोच्छासादेरकारण एव तत्सम्बन्धवीक्षणाच्च न च निष्क्रियत्व श्रुत्याकर्तृत्वं जीवस्य बाध्यते। अस्तिभाति विदिधात्वर्थानामात्मनि सत्वेन निष्क्रियत्वासिद्धेः धात्वर्थोहि क्रियेत्याहुः न च निर्विकारत्वश्रुत्या तस्य

तदाप्यते। सत्ताभानज्ञानगुणाश्रयत्वेऽपि द्रव्यान्तरतापत्तिरूपस्य विकारस्य तत्राप्रसङ्गात्। यथा संयोगाश्रयत्वेऽपि आकाशे न कोऽपि विकारस्तथा स्थूलक्रियाश्रयत्वे स नात्मनीति द्रष्टव्यं सुषुप्तावपि सुखज्ञानसाक्षित्वरूपं कर्तृत्वमस्तीति पारमार्थिकं जीवस्य तत् तच्चेश्वराधीनं बोध्यम्। एष एव साधुकर्म्म कारयतीत्यादिश्रुतेः। परात्तु तच्छ्रुतेरिति सूत्राच्च। स च जीवो भगवद्दासो मन्तव्यः दासभूतो हरेरेव नान्यस्यैव कदाचनेति पाद्मात्। ननु सर्वेषां जीवानां तद्दासत्वे स्वरूपसिद्धे निर्विशेषे च सति उपदेशादेर्वैयर्थ्यमिति चेन्न तदभिव्यञ्जकत्वेन तस्य सार्थक्यात् नहि मथनेन विना दध्नि सर्पिरणौ च वह्निराविर्भवेत्, स च जीवो गुरूपसत्त्या तदवाप्तया हरिभक्त्या च पुरुषार्थीभवति।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इति॥
आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्षेऽथ संपत्स्ये इति। श्रद्धाभक्तिज्ञानयोगादवैतीति।
ततस्तु तं पश्यते निष्कलं ध्यायमान इति च श्रुतिः॥

तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्।
शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम्॥
तत्र भागवतान् धर्म्मान् शिक्षेद्गुर्वात्मदैवतः।
अमाययानुवृत्त्या यैस्तुष्येदात्मात्मदो हरिरिति॥ स्मृतेश्च

सा च भक्तिः शास्त्रज्ञानपूर्विकैवानुष्ठेया, तमेव
धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण इति श्रवणात्। ते च
जीवा मुक्तावपि हरिमुपासते एतत् सामगायन्नास्ते
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय इति श्रवणात्।
इत्थञ्च तदनुभविनान्तद्दासत्वात्तद्रूप गुणविभूतीनां लावण्य
चन्द्रिकात्वप्रसङ्गः, तदित्थं विभुत्वाणुत्वादि मिथोविरुद्ध
शास्त्रकगम्य नित्यगुणयोगादीश्वर जीवयोर्भेदः सार्वदिकः
सिद्धः ननु किमिदमपूर्वमुच्यते। ईशादन्यो जीव इति
त्वं वा अहमस्मि भगवो देवते तद्योऽहसो सौ यो सो
सोऽहंतत्त्वमसीति। व्यवहारदशायां यत्त्वस्य सर्वमात्मै
वाभूतत् केन कम्पश्येदिति मोक्षदशायाञ्च तयोरभेद
श्रवणात्। भेदस्यावस्तुत्वाद्ग्राही निन्दति, यदेवेह तदमुत्र
यदमुत्र तदन्विह मृत्योः स मृत्युमाप्नोति य इह नानेव प-
श्यति। यदा ह्येवैष उदरमन्तरं कुरुते अथ तस्य भयं भवती
त्यादि श्रुतो नैतच्चतुरस्रं द्वासुपर्णा सयुजासखाया समानं
वृक्षं परिषस्वजाते, तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो-
ऽभिचाकशीति पूर्वस्याम्। यथोदकं शुद्धे शुद्धमासिक्तं
तादृगेव भवति। एवं मुनेर्विजानतः आत्मा भवति
गौतमनिरञ्जनः परमं साम्यमुपैति इति। परस्याञ्च तयो-
र्भेदः श्रवणात्। भगवता च मुक्तौ भेदः स्मर्यते, इदं ज्ञान
मपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये
न व्यथन्ति चेत्यादौ। इत्यत्र ब्रह्मैव सन् ब्रह्माप्येति इत्यादौ

ब्रह्म-सदृशः सन्नित्येवार्थः सुघटस्तत्रैव शब्दस्य सादृश्या-
देव इतरथा ब्रह्मभावोत्तरी ब्रह्माप्ययो विरुद्धः स्यात्।
यदेवेहेत्यादौ ब्रह्माविर्भावेषु भेदग्राही निन्द्यते यदाह्यो-
वेत्यादौ ब्रह्मणि कपटं प्रतिसिध्यते इति न क्वापि क्षतिः।
एवं सति त्वं वा अहमस्मीत्यादौ तयारभेदः प्रतीतः। स
खलु तदायत्तवृत्तिकत्व तद्व्याप्यत्वाभ्यां सङ्गच्छते। यथा
प्राणसंवादे प्राणायत्तवृत्तिकत्वा द्वागादेः प्राणरूपता प-
ठ्यते च्छान्दोग्ये न वै वाचो न चक्षूंषि न श्रोत्राणि न मनां-
सीत्याचक्षते। प्राण इत्येवाचक्षते प्राणोह्येवैतानि स-
र्वाणि भवतीति। यो यद्व्याप्यः सतद्रूपः स्मर्यते वैष्णवे

योऽयं तवागतो देव समीपं देवतागणः।
सत्वमेव जगत्-स्रष्टायतः सर्वगतो भवानिति।

श्रीगीतासु च।

सर्वं समाप्नोषि ततोऽसि सर्व इति। यत्त्वस्येत्यत्र तु मु-
क्तस्य जीवस्य विग्रहेन्द्रियादिकं सर्वं भगवत् संकल्पादेव भव-
तीत्युच्यते। अन्यथा सर्वमित्येतद्व्याकुप्येत्। यत् तु वदन्ति
त्वं वा इत्यादौ जहदजहत्स्वार्थलक्षणया विभुत्वाणु-
त्वादीन् गुणान् हित्वा चैतन्यमात्रं लक्षणीयमिति तन्मन्दं
नित्यगुणानां वाक्यात्रेण हानासम्भवात्। सर्वशब्दा-
वाच्यं लक्षणाया अयोगाच्च। तदवाच्यं खलु त्वया ब्रह्मा-
भ्युपगम्यते। ननु यतो वाचो निवर्त्तन्ते अप्राप्य मनसा
सहेत्याद्या श्रुतिरेव ब्रह्मत्वं तथाह। मैव मेतत् कृत्स्ना

वाच्यतायास्तत्राभिधानात्। यदुक्तं श्रीभागवते। कार्त्स्न्येन नाजोऽप्यभिधातुमीश इति। अन्यथा सर्वे वेदा यत्पद मामनन्तीति श्रुतिः। वेदैश्च सर्वैं रहमेव वेद्य इति स्मृतिश्चव्याकुप्येत्। तत्रैव वाक्ये यत इत्य प्राप्येति च विरुध्येत यत्त्वविद्यावच्छिन्नमविद्या प्रतिविम्बितं वा ब्रह्मैव जीवः। आकाश मेकं हि यथा घटादिषु पृथग्भवेत्। तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्॥इत्यादिश्रुतेः॥ त्वद्विज्ञानेनाविद्याविनाशेतु तद्द्वैतं सिद्धं घटाद्युपाधिनाशे सत्याकाशाद्यद्वैतवदितिवदन्ति तदसत्। जडयाऽविद्ययाचैतन्यराशिच्छेदायोगात्। नीरूपस्य विभोः प्रतिविम्बायोगाच्च। अन्यथा वायुदिगादेस्तदापत्तिः। आकाशस्य ज्योतिरंशस्य तु तत्तयाप्रत्ययो भ्रम एवेति तत्त्ववेदः श्रुतिस्वनुवादिनीत्याहुः। यत् तु वदन्त्यद्वितीये शुद्धचैतन्ये तदज्ञानाज्जीवेश्वरादिमवाध्यासः। नभःस्वरूपापरिज्ञानात्तत्र यथा नीलिमाऽध्यस्यते। तज्ज्ञानेन तस्मिन्नध्यस्तस्य तस्य विनिवृत्तौ तु शुद्धन्तदवशिष्यत इति तदिदं रभसाभिधानमेव अविषये तस्मिन्नध्यासायोगात् नभसो ज्ञानविषयत्वात्तत्र नीलिमाध्यासः सम्भवी। न च तद्वत् शुद्धचैतन्यं ज्ञानविषयो भवतां तस्माद्यत्किञ्चिदेतत्। किञ्च कीदृशं ज्ञानं निवर्तकमिष्यते। शुद्धचैतन्यं वृत्तिरूपं वा। नाद्यः। तस्य नित्यत्वेन नित्यमध्यस्तनिवृत्तिप्रसङ्गात्। नापिवृत्तिरूपं तस्य सत्त्वे द्वैतापत्तेः मिथ्या

त्येकथमध्यस्त निवर्त्तकता। सत्यस्य हि शुक्त्यादिज्ञानस्य रजताद्यध्यस्तनिवर्त्तकता दृष्टा। यत्त्वाहुः फलवत्यज्ञातेऽर्थे शास्त्रतात्पर्य्यवीक्षणात्ताद्दगभेदस्तत्तात्पर्य्यगोचरः। वैफल्याज्ज्ञानत्वाच्च भेदस्तद्गोचरो न स्यात् किं त्वनुद्यमान एव सः। अग्नौ वा एष प्रातरुदेति आपः सायं प्रविशतीतिवदिति तन्मन्दं। पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति। जुष्टं यदा पश्यत्यन्यमीशमन्यस्य महिमानमेति वीतशोक इत्यादौ तत्र फलश्रवणात् विरुद्ध धर्म्मावच्छिन्नप्रतियोगिकतया लोके तस्याज्ञातत्वाच्च। ते च धर्म्मा विभुत्वाणुत्वादयः शास्त्रकगम्या भवन्ति। अभेदस्त्वफलस्तत्र फलानङ्गीकारादज्ञातश्च नरशृङ्गवदसत्वादेव अभेदबोधिकाः श्रुतयस्तु तदायत्तवृत्तिकत्वतद्व्याप्यत्वाभ्यां सङ्गमिता एव। किञ्च भेदो ब्रह्मेतरो ब्रह्मात्मको वा। नाद्यः। अभेदहानात् तदितरस्य मिथ्यात्वेन श्रुतीनामतत्वावेदकत्वापत्तेश्च। सत्यता च भेदस्य मिथो विरुद्धयोरन्यतरनिषेधस्यान्यतरविधिव्याप्तत्वात् न चान्त्यः ब्रह्मणः स्वप्रकाशतया नित्यसिद्धया श्रुतीनां सिध्यसाधनतापत्तेः।

अपि च नाभेदस्योपदेशः सिध्यति। उपदेष्टुरनिर्णयात्। तथा तदुपदेष्टा तत्वज्ञो न वा। आद्येऽद्वितीयमात्मानं विजानतस्तस्य नोपदेश्यभेददृष्टेरिति। न तं प्रत्युपदेशः सम्भवेत्। अन्त्येऽप्यज्ञत्वादेव नात्मज्ञा-

नोपदेष्टृत्वम्। अथाधिगताभेदस्यापि तस्य बाधितानुवृत्तिरूपमिदं भेददर्शनं मरीचिकावारिबुद्धिवद्दतो नापदेशानुपपत्तिरिति चेन्मन्दमेतत्। दृष्टान्तविरोधात् तद्बुद्धिर्हि बाधितानुवर्त्तमानापि वार्य्याहरणे प्रवर्त्तयेदेवमभेदज्ञानबाधिताभेद दृष्टिरनुवर्त्तमानापि मिथ्यार्थविषयत्वनिश्चयान्नोपदेशे प्रवर्त्तयेदिति विषयनिदर्शनम्।

यत्तु शुद्धे चैतन्ये अज्ञानेन कल्पितमिदं विश्वन्तज्ज्ञानेन बाध्यं रज्जुभुजङ्गवत्। तेनाद्वैतं सिद्धमेवेति वदन्ति तदपि निरवधानमेव चोद्यक्षमत्वात्। तथाहि किमिदमज्ञानं ब्रह्मणि जीवे वा न प्रथमः। स्वप्रकाशचैतन्ये तस्मिंस्तद्योगासम्भवात् तुरीयत्वहानाच्च। न द्वितीयः। कल्पनात् पूर्वं जीवभावसिद्धेः। अथाज्ञानं सत्यं न वा नाद्यः। अनिवृत्तिप्रसङ्गात्। नाप्यन्त्यः। प्रतीतिविरहात् न च सदसद्विलक्षणत्वादिष्टसिद्धिः तादृशे प्रमाणाभावात्। घटादीनां सत्वं खपुष्पादीनामसत्वं घटादीनामेव देशकालव्यवस्थया सदसत्वमिति प्रकारत्रयस्यैवानुभवात्तोऽन्यत् सदसद्विलक्षणमनिर्वचनीयमज्ञानं स्वीकर्त्तुं शक्यं। ततो यत्किञ्चिदेतत्। तस्मात् परास्यशक्तिमता भगवता निमित्तेन प्रधानादिशक्तिमता च तेनोपादानेन सिद्धमिदं जगत्पारमार्थिकमेव। सोऽकामयत बहु स्यां प्रजायेय स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत।

यदिदं किञ्चित् कवि र्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः समाभ्यः तदात्मानं स्वयमकुरुतेत्यादि श्रवणात्।

तदेतदक्षयं नित्यं जगन्मुनिवराखिलं।
आविर्भावतिरोभाव जगन्नाश विकल्पवत्॥
इति वैष्णवात्।

ब्रह्म सत्यं तपः सत्यं सत्यं चैव प्रजापतिः।
सत्याज्जातानि भूतानि सत्यम्भूतमयंजगदिति॥
महाभारताच्च।

एकमेवाद्वितीयं ब्रह्मेत्यत्रापि वनलीनविहङ्गादिन्यायेन तदपि जगत् सत्यं सिद्धं। भ्रमवादस्तु सर्वथाऽनुपपन्नः। सोऽकामयत इत्यादि श्रुतिव्याकोपात्। किञ्च क्व कस्यायं भ्रमः शुद्धचेतन्ये जीवस्येति चेन्न। तस्याप्रत्यक्षत्वात् अध्यारोपे ह्यधिष्ठानसाक्षात्कारस्तन्त्रं। न च शुद्धचैतन्यं स्वस्मिन् जगद्रूपेण पश्यति। तस्य नित्यसिद्धस्वरूपज्ञानत्वात्। किञ्च सादृश्यावलम्वी भ्रमोऽनुमीयते स्थाणुः पुमानित्यादौ। तथाच भ्रमविषयाज्जगतोऽन्यत् पारमार्थिकं सिद्धं। अस्ति हि शुक्तिरजतादन्यत् पारमार्थिकं रूप्यं तदित्यनुपपन्नस्तद्वादः। तस्मादीश्वरादन्यस्तद्वन्नित्यचेतनस्तदंशो जीवो भवतीति सिद्धम्।

इति वेदान्तस्यमन्तके जीवतत्त्वनिरूपणस्तृतीयः किरणः।

# अथ प्रकृतितत्त्वं निर्णीयते।



सत्वादिगुणत्रयाश्रयो द्रव्यं प्रकृतिर्नित्या च सा।
गौरनाद्यन्तवती सा जनित्री भूतभाविनी॥
सितासिता च रक्ता च सर्वकामदुघा विभोरित्यादि श्रुतिः।
त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम्।
अचेतना परार्थ्या च नित्या सततविक्रिया।
त्रिगुणं कर्मिणां चैवं प्रकृते रूपमुच्यते।

इति स्मरणाच्च। तत्र प्रकाशादिर्गुणः सत्वं। रागदुःखादिहेतू रजः। प्रमादालस्यादिहेतुस्तु तमः। एषां साम्ये प्रलयः। एकदेहस्थसाम्ये कफवातपित्तसाम्ये मृत्युरिव। अङ्गाङ्गिभावेन वैषम्ये तु महदादि सर्गः स्यात् प्रलये स्वरूपः साम्यरूपः। परिणामः सर्गेतु विरूपः स इति सततविक्रियेत्युक्तं प्रकृतेरस्याः प्रथमपरिणामादिनात्मन्यनध्यवसायहेतुः। स च त्रिविधः।

सात्विको राजसश्चैव तामसश्च त्रिधा महान्।

तस्मिन् विकारविशेषोऽहङ्कारः आत्मनि देहाहम्भावहेतुः इति श्रीविष्णवात्। स च सात्विको राजसस्तामसश्चेति त्रिविधः। क्रमाद्वैकारिकतैजस

भूतादिशब्देनाभिधीयते। सञ्चमस्तृद्वयोः। प्रवर्त्तकतया सहकारीत्वात्। सात्त्विकादहङ्कारादिन्द्रियाधिष्ठात्रो देवता मनश्च। राजसाद्दशेन्द्रियाणि दश। तामसात्तु तन्मात्रद्वाराकाशादीनि पञ्चेति। एवमेवोक्तमेकादशे।

ततो विकुर्वतो जातो योऽहङ्कारो विमोहनः।
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत्।
तन्मात्रेन्द्रिय मनसां कारणं चिदचिन्मयः।
अर्थस्तन्मात्रिकाज्जज्ञे तामसादिन्द्रियाणि च।
तैजसाद्देवता आसन्नेकादश च वैकृतादिति।

तामसादर्थः पञ्चभूतलक्षणः। तैजसादिन्द्रियाणि दश।वैकृतादेकादश देवता आसन्मनश्चेत्यर्थः। तृतीये च।

महत्तत्त्वाद्विकुर्वाणाद्भगवद्वीर्यचोदितात्।
क्रियाशक्ति रहङ्कारस्त्रिविधः समपद्यत।
वैकारिकस्तैजसश्च तामसश्च यतो भवः।
मनसश्चेन्द्रियाणाञ्च भूतानां महतामपि।

इति मनसश्चेति चाद्देवतानां चेति बोध्यं क्रमादिति च। अयमत्र निष्कर्षः। द्विविधं खल्विन्द्रियं अन्तरिन्द्रियं बहिरिन्द्रियं चेति। तत्रान्तरिन्द्रियं मनः सात्त्विकाहङ्कारोपादानकं द्रव्यं सङ्कल्पविकल्पहेतु हृत्प्रदेशवृत्ति। तदेव क्वचिदध्यवसायाभिमानचिन्तारूपकार्य्यभेदाद्बुद्ध्यहङ्कारचित्तसंज्ञां धत्ते। इदं मनो विषयसंसर्गे बन्धहेतुः। तं

विद्यायाश्च प्राबल्ये तु मोक्षहेतुश्च भवति।
मन एव मनुष्याणां कारणं बन्धमोक्षयोः॥

अशुद्धं कामसङ्कल्पं शुद्धं कामविवर्जितमिति श्रुतेः। तदित्थं स्मृत्यादिकरणमिन्द्रियं मनः सिद्धं। राजसाहङ्कारोपादानकं द्रव्यं बहिरिन्द्रियं। तच्च द्विविधं ज्ञानेन्द्रियकर्मेन्द्रियभेदात्। तत्राद्यं पञ्चविधं श्रोत्रत्वक्चक्षूरसनघ्राणभेदात्। तत्र शब्दमात्रग्राहकमिन्द्रियं श्रोत्रम् मनुष्यादीनां शष्कुल्यवच्छिन्नप्रदेशवृत्ति सर्पाणां तु चक्षुर्वृत्ति। स्पर्शमात्रग्राहकमिन्द्रियं त्वक् सर्वशरीरवृत्तिः नखकेशादौ प्राणमात्रतारतम्यात् स्पर्शानुपलब्धिः। रूपमात्रग्राहकमिन्द्रियं रसनं जिह्वाग्रवृत्ति। गन्धमात्रग्राहकमिन्द्रियं घ्राणं नासाग्रवृत्ति। श्रोत्रादीनां पञ्चानामाकाशादीनि पञ्च क्रमेणाप्यायकानि भवन्तीति। भौतिकत्वमेषामुपचर्य्यते। एवं मनःप्राणवाचां च क्रमात् पृथिव्यप्तेजोभिराप्यायनात्तत्तन्मयत्वं। श्रुतिश्च। अन्नमयं हि सोम्य मनः आपोमयः प्राणस्तेजोमयी वागिति। अन्त्यमपि पञ्चविधं, वाक्पाणिपादपायूपस्थभेदात्। तत्र वर्णोच्चारणहेतुरिन्द्रियं वाक् हृत् कण्ठादिवृत्तिः। यदुक्तं

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।
जिह्वामूलञ्च दन्ताश्च नासिकौष्ठौ च तालु चेति वेदभाष्ये।

गवादिष्वदृष्टाभावाच्चदभावः। शिल्पादिहेतुरिन्द्रियं पाणिः मनुष्यादीनामङ्गुल्यादिवृत्ति हंस्यादीनां तु नासिका-

यादिवृत्तिः । सञ्चारहेतुरिन्द्रियं पादः, मनुष्यादीनामङ्घ्रिवृत्तिः । उरगविहगादीनामुरःपक्षादिवृत्तिः । मलादित्यागहेतुरिन्द्रियं पायुस्तत्तदवयववृत्तिः । आनन्दविशेषहेतुरिन्द्रियमुपस्थः स च मेहनादिवृत्तिरिति । सात्त्विकाहङ्कारादिन्द्रियाधिष्ठातारश्चन्द्रादयश्चतुर्दश देवता भवन्ति । तेषु चन्द्रचतुर्मुखशङ्कराच्युतैः क्रमात् प्रवर्त्तितानि मनोबुद्ध्यहङ्कारचित्तानि सङ्कल्पाध्यवसायाभिमानचिन्ताः प्रवर्त्तयन्ति । दिग्वातार्कवरुणाश्विभिः क्रमात् प्रवर्त्तितानि श्रोत्रत्वक्चक्षूरसनघ्राणानि शब्दस्पर्शरूपरसगन्धान् प्रकाशयन्ति । अग्नीन्द्रोपेन्द्रयमप्रजापतिभिः, क्रमात् प्रवर्त्तिता वाक्पाणिपादपायूपस्था वचनादानविहरणोत्सर्गानन्दाननुभावयन्तीति । तामसाहङ्कारात्तु, तन्मात्राण्यन्तरीकृत्य पञ्चभूतान्युत्पद्यन्ते । तामसाहङ्कारभूतवर्गयोरान्तरालिकः परिणामस्तन्मात्रशब्दवाच्योऽविशेषशब्देन च कथ्यते । यथा दुग्धदध्नोरान्तरालिकः कललपरिणामस्तथैव द्रष्टव्यः । भूतवर्गस्तु विशेषशब्देनोक्तः । सूक्ष्मावस्था तन्मात्राणि स्थूलावस्था तु भूतानीति । एतां भूतोत्पत्तिप्रक्रियां बहुधा निरूपयन्ति । तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुरित्यादि श्रुत्यर्थच्छायामालम्ब्य भूताङ्कूतोत्पत्तिरेके । तदाहुः किन्तदासीदित्यादिसुबालश्रुतिं, तस्मादहङ्कारात् पञ्चतन्मात्राणि तेभ्यो भूतानीति गोपालश्रुतिञ्च दृष्ट्वा

केचिदेवं वदन्ति। भूतादेरहङ्कारात् पञ्चापि तन्मात्राण्युत्पद्यन्ते तेभ्यः क्रमात् पञ्चभूतानीति। तान्ताच श्रुतिं निभाल्य परे त्वेवं वर्णयन्ति। भूतादेः शब्दतन्मात्रं तस्मादाकाशः आकाशात् शब्दस्पर्शतन्मात्रं तस्माद्वायुः। वायो रूपतन्मात्रं तस्मात्तेजः। तेजसो रसतन्मात्रं तस्मादापः, अद्भ्यो गन्धतन्मात्रं ततः पृथिवीति। एषां पञ्चानां लक्षणानि। स्पर्शवत्त्वे सति विशिष्टस्पर्शशब्दाधारत्वमाकाशत्वम्। विशिष्टस्पर्शवत्वे सति रूपशून्यत्वम्। अनुष्णाशीतस्पर्शवत्वे सति गन्धशून्यत्वं वायुत्वम्। उष्णस्पर्शवत्वं भास्वररूपवत्वं वा तेजस्त्वं। शीतस्पर्शवत्वे निर्गन्धत्वे सति विशिष्टरसत्वं वाप्यं। विशिष्टगन्धवत्वं पृथिवीत्वमिति भूतानां पञ्चीकृतत्वात् शब्दादीनां सर्वत्रोपलब्धा नाम नानुपपन्नः। पञ्चीकरणं त्वित्थं बोध्यम्। सर्वेश्वरो हरिः पञ्चापि भूतानि सृष्ट्वा तानि प्रत्येकं द्विधा समं विभज्य तयोः पञ्चकयोरेकं प्रत्येकं चातुर्विध्येन समं विभज्य तेषां चतुर्णां भागान् स्वस्वस्थूलभागत्यागेनान्यस्मिन् योजनमिति। यदुक्तं विभज्य द्विधा पञ्चभूतानि देवस्तदर्धानि पश्चादिभागानि कृत्वा तदन्येषु मुख्येषु तं तं नियुञ्जन् स पञ्चीकृतिं पश्यतिस्मेति। एभ्यः पञ्चीकृतेभ्यो भूतेभ्यश्चतुर्दशलोकखचितान्यण्डानि सन्तीति। तेषु भूर्भुवः स्वः महर्जनस्तपःसत्याभिधाः सप्तलोकाः उपर्युपरि सन्ति। अतलवितलसुतलरसातलतलातलमहातलपातालाख्याः सप्त त्वधः

सन्तीति। तेभ्य एव जरायुजाण्डजस्वेदजोद्भिज्जानि चतुर्विधानि शरीराणि चाण्डवर्त्तिनां जीवानामुत्पद्यन्ते। तेषु मनुष्यपश्वादीनि जरायुजानि, पक्षिपन्नगादीनि अण्डजानि, यूकामशकादीनि स्वेदजानि, तरुगुल्मादीन्युद्भिज्जानीति। इह दिक् पृथक्द्रव्यं न कल्प्यते। सूर्यपरिस्पन्दनादिना आकाशस्यैव प्राच्यादिरूपतासिद्धेः। दिक्सृष्टिस्त्वन्तरिक्षादिसृष्टिवत् सिध्यति। प्राणो न पृथक् तत्वं अवस्थान्तरापन्नस्य वायोरेव तत्वेन सिद्धेः। स पञ्चविधः प्राणापानसमानोदानव्यानभेदात्। महदादीति पृथिव्यन्तानि तत्वानि समष्टिस्तेष्वेकदेशोपादानेन क्रियमाणानि कार्य्याणि तु व्यष्टिरुच्यते। अपरे तु अष्टौ प्रकृतयः षोडशविकारा इति श्रुत्यनुसारेण भूतादेः शब्दतन्मात्रं तस्मादाकाशः स्पर्शतन्मात्रं चोत्पद्यते, स्पर्शतन्मात्राद्वायुः रूपतन्मात्रं च, रूपतन्मात्रात्तेजो रसतन्मात्रञ्च, रसतन्मात्रादापो गन्धतन्मात्रञ्च सहैवोत्पद्यते। गन्धतन्मात्राद्भूमिरिति वर्णयन्ति। एष्वाकाशादिषु पञ्चसु शब्दस्पर्शरूपरसगन्धाः पञ्च गुणा यथोत्तरमेकैकाऽधिका न व्यज्यन्ते। तत्राकाशे शब्द एकः,वायौ शब्दस्पर्शौ द्वौ,तेजसि रूपान्तास्त्रयः, अप्सु रसान्ताश्चत्वारः, पृथिव्यां तु गन्धान्ताः पञ्चेति। इह तन्मात्राणां विषयाणां समाननामत्वश्रवणाद्भेदो न शङ्क्यः, पूर्वेषां भूतकारणत्वेन परेषां भूतधर्मत्वेन भेदात्। तदित्थं प्रकृतिमहदहङ्कारैकादशेन्द्रियतन्मात्रपञ्चकभेदेन

चतुर्विंशतितत्त्वानि वर्णितानि, एषु प्रकृत्यादित्रिकं भूतपञ्चकञ्च स्थूलदेहस्योपादानं। इन्द्रियानि तु भूपणार्पितरत्नानीव तदाक्रम्य तिष्ठन्ति। पञ्चतन्मात्राण्येकादशेन्द्रियाणि प्राणश्च सूक्ष्मदेहस्योपादानमिति व्याख्यातारः। शरीरत्वं हि चेतनं प्रति नियमेनाधेयत्वं विधेयत्वं शेषत्वञ्च। भोगायतनं चेष्टाश्रयो वा शरीरमित्यादि लक्षणन्तु दुष्टं पत्नीशरीरादावतिव्याप्तेः। इह प्रकृत्यादेरुत्पद्यमानं महदादि न द्रव्यान्तरं। न हि मृत्पिण्डादुत्पद्यमानं घटादिकमर्थान्तरमुपलभ्यते किं त्ववस्थान्तरमेव तत्रोत्पद्यते,तावतैव नामसंख्याव्यवहारादिभेदसिद्धिः। नान्यथा सेनावनराश्यादिव्यवहारः सिध्येत्। तस्मादेकस्मिन् द्रव्ये कारणकार्ये द्वे अवस्थे तेच मिथोभिन्ने द्रव्यत्वभिन्ने भवतः। तन्तु पटात्मकं मिथोभिन्नं द्रव्यमिति तार्किका मन्यन्ते। तन्न, अनुपलम्भादनुमानाद्गौरवापत्तेश्च। भेदाभेदमिति सांख्याः प्राहुः। तच्च न। विरोधात् तस्मादभिन्नमेव कारणात्कार्यमिति॥

इति श्रीवेदान्तस्यमन्तके प्रकृतितत्त्वनिरूपण-

चतुर्थकिरणः ॥ ४ ॥

—००—

## अथ कालतत्वनिरूपणम् ।

त्रैगुण्योशून्यो जड़ो द्रव्यविशेषः कालः। स हि भूतभविष्यद्वर्त्तमानयुगपच्चिरक्षिप्रादिव्यवहारस्य सर्गप्रलययोश्च हेतुः क्षणादिपरार्द्धान्तश्चक्रवत् परिवर्त्तमानो वर्त्तते। तत् सिद्धिस्तु त्वः कालकालो गुणी सर्व्वविद्यः योऽयं कालस्तस्य तेऽव्यक्तबन्धोर्चेष्टामाहुर्यं इति येन विश्वं निमिषादिर्वत्सरान्तो महीयांस्तन्त्वीशानं क्षेमधामत् प्रपद्ये। कालचक्रं जगच्चक्रमित्यादि श्रुतिः। स्मृतिश्च नित्योभिभृश्चैषः सदेव सौम्येदमग्र आसीदित्यादिषु सर्गात् प्रागपि तस्य सत्वावगमात्। सर्वत्र कार्य्योपलम्भाच्च यदुक्तं।

नसोऽस्ति प्रत्ययो लोके यत्र कालो न भासत इति ॥

सर्व्वनियामकोऽप्ययंपरमात्मना नियम्यो भवति। त्वः कालः काल इति श्रवणात् त्वचेष्टात्वस्मरणाच्च। अत स्तन्नित्यत्वविभूतौ नास्य प्रभावः। न यत्र कालो जगतां परः प्रभुः, कुतोऽनुदेवा जगतां य ईशिरे इत्यादिस्मृतेः ॥

इति श्रीवेदान्तस्यमन्तके कालतत्त्वनिरूपणः
पञ्चमः किरणः ॥ ५ ॥

—००—

## अथ कर्म्म निरूप्यते ।

तच्च क्रिया रूपं कृति साध्यमपि कृतिमदृगादि सिद्धवीजाङ्कुरादि वदनादि सिद्ध रुक्तं न कर्म्मा विभागादितिचेन्न अनादित्वादिति। तत् खल्वशुभं शुभञ्चेति द्विभेदं । वेदेन निषिद्धं नरकाद्यनिष्टसाधनं ब्राह्मणहननाद्यशुभं, तेन विहितं काम्यादितु शुभं। तत्र स्वर्गादीष्टसाधनं ज्योतिष्टोमादि काम्यं। अकृते प्रत्यवाय जनकं सन्ध्योपसनोऽग्नि होत्रादि नित्यं। पुत्रजन्माद्यनुवन्धि जातेष्ट्यादि नैमित्तिकं। दूरितचयकरं चान्द्रायणादि प्रायश्चित्त मितिशुभं वहुविधं। एषु निषिद्धमिव काम्यञ्च मुमुक्षोर्हेयमेव। मुक्ति प्रतिबन्धि फलत्वात्। नित्यादिकन्तु चित्तशुद्धि करत्वात्तेनानुष्ठेयमेव। किञ्च ज्ञानोदयात् पूर्व्वं यत् सञ्चितं तत् शुभमशुभञ्च ज्ञानेन विनश्यति। ततःपरं क्रियमाणं न तेन विद्वान् विलिप्यते तथा तद् यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं ह्यास्य सर्व्वपाप्मानः प्रदूयन्त इति ।

यथा पुष्कर पलाश आपोनश्लिष्यत एव मेवात्मविदि पापं कर्म्म न श्लिष्यन्त इति च छान्दोग्यश्रुतिः। अत्र सञ्चित क्रियमाणयोः पापयो र्विनाश विश्लेषावुक्तौ उभे उहै वैष एते तरत्यमृतः साध्वसाधुनी इति वृहदारण्यक श्रुतिः। अत्र तयोः पाप पुण्ययो स्तौदर्शितौ उभे सञ्चित क्रियमाणे

साधुसाधुनी पुण्यपापे एष विद्वान् तरत्युकइयति सञ्चितयोर्विनाशः क्रियमाणयो रश्लेष इत्यर्थः। इत्थं ज्ञानेनैव विनिवृत्तकर्म्मसलस्तेनैव हरिपदं प्राप्याचय सुखमाक् तत्रैव निवसति ततः पुन र्न निवर्त्तते। 'ब्रह्मविदाप्नोति परं तमेव विदित्वा अति मृत्युमेति नान्यः पन्था विद्यते अनायासोऽश्नुते सर्व्वान् कामान् नच पुनरावर्त्तत इतिश्रवणात्"। तच्च ज्ञानं द्विविधं परोक्षमपरोक्षञ्च। परोक्षं शब्दं, अपरोक्षन्तु हार्द्दिनी सार समवेत सम्बिद्रूपं, यच्च भक्तिशब्द शब्दव्यपदेश्यं दृष्टं विज्ञान घनानन्द "घनासच्चिदानन्दैकरसे भक्तियोगे स तिष्ठतीति गोपालोपनिषदि" तत्रपूर्व्वं परं परया परन्तु साक्षाद्ब्रह्म प्रापकं बोध्यं। केचित्तु महत्तम प्रसङ्गलब्धेन शुद्धभक्तियोगरूपेण श्रवणकीर्त्तनादि कर्म्मणैव चित्तशुद्धिं हरिपदञ्च लभन्ते इतिदृष्टं "पिबन्ति ये भगवत आत्मनः सतां, कथामृतं श्रवणपुटेषु संभृतं। पुनन्ति ते विषय विदूषिताशयं, ब्रजन्ति तच्चरणसरोरुहान्तिक" मित्यादिषु। तदित्थं तत्त्व पञ्चकं विस्तृतं श्रीवैष्णवे चोक्तमेतत्। विष्णोःस्वरूपात् परतोहि तेऽन्ये, रूपे प्रधानं पुरुषश्च विप्र। तस्यैवतेऽन्ये न धृते वियुक्ते, रूपेण यत्तद्द्विजकालसंज्ञं॥ जनेश कर्म्मस्तिमितात्मनिश्चये रित्यादिना॥ तदेव मेतत् पञ्चक विवेकी वर्णित साधन सम्प्राप्तिमान् विशुद्धः श्रीहरिपदमुपलभ्य तत्रैव सर्व्वदा दिव्यति इति।

नित्यं निवसतु हृदये चैतन्यात्मामुरारिर्नः ।
निरवद्यो निर्वृतिमान् गजपतिरनुकम्पया यस्य॥ १ ॥

राधादि-दामोदर-नामविभ्रता,
विप्रेण वेदान्तमयः स्यमन्तकः ।
श्रीराधिकायै विनिवेदितो मया,
तस्याःप्रमोदं सतनोतु सर्व्वदा ॥ २ ॥

इति श्रीवेदान्तस्यमन्तके कर्म्मतत्त्वनिरूपणः
षष्टः किरणः ।

सम्पूर्णम् ।

—*—